वर्षः चतुर्दशः अङ्क – दशमः

स्वीकृतम्—शिक्षा निदेशालयेन दिल्ली प्रशासनस्य शिक्षालयानां पुस्तकालयानां च कृते द्वारा पत्र सं ५/१/८४ पा० पु० २५८१-३८८१—दिनांक ४-८-८४

## विषय-क्रमः



शाकाब्द १९१३
वैक्रमाब्द २०४८ कार्तिक मासस्य
सन् १९९१ अक्टूबर मासस्य

प्रधान-सम्पादकः
प्रभाकर, रामरत्न शास्त्री
साहित्याचार्य, एम.ए.
१४१८, बाजार गुलियान, दिल्ली-११०००६
दूरभाष : ३२६४८८६

आजीवन —शुल्कम् २५१) रूप्यकाणि वार्षिकं शुल्कम् २०) रूप्यकाणि

# सम्पादकीयम्

—राम रत्न शास्त्री

## १. दूरदर्शने संस्कृतम्—

दूरदर्शनं हि भारत सर्वकारस्य "सूचना प्रसारण-मन्त्रालयान्तर्गतं सशक्तं ज्ञातव्य-सूचकः दृश्य, श्रव्यं च, माध्यमं वर्तते। यद् अद्य समग्रे भारते-सर्वत्र-ग्रामीणाञ्चलेषु अपि-सौत्सुक्यं सर्वैः दृश्यते। मनोरञ्जनस्य साधनं स्वीक्रियते। इदं न केवलं देशे घटितानां वृत्त-वार्तानां सूचना-प्रसारकम् प्रत्युत अस्मद् ज्ञान वृद्धिकरं राष्ट्र संस्कृति प्रसारकं अपि विद्यते। रामायण, महा भारत-चाणक्य प्रभृतिभिः समर्थ-प्रसारणैः एतद् एव साध्यते।

दूरदर्शन प्रसारणेषु काले काले भारतस्य पुरातनां सनातनां च देववाणीं (संस्कृतम्), तत् श्लोकान्, मन्त्रान् नाट्यानि, विविधान् च अन्यान् कार्यक्रमान् (प्रसारणानि) संश्रुत्य संवीक्ष्य च भारतीयानां चेतांसि परमामोदं प्राप्नुवन्ति प्रतीयते च यद् वयं "भारते" वसामः इत्यर्थे "दूरदर्शनं विभागः सूचना मन्त्रालयः च प्रशंसार्हः विद्यते।

"आकाश वाणी" केवलं श्रव्यत्वेन एतत् सर्वं नितरां साधयति। "दूरदर्शनम्" "आकाश वाणी" च द्वयम् अपि एकस्यैव मन्त्रालयस्य अन्तर्गतं वर्तते। एतद् द्वय एकस्य एव मन्त्रालयस्य निर्देशान् अनुपालयति एतस्य द्वयस्य कृते नीति-निर्धारणं अपि एकाधीनम् एव। एकम् एव लक्ष्यं द्वयस्य। एतद् द्वयम् एव भारत जनान्-भारत-वहिर्गतान् प्रवासिनः अपि जनान् किमपि उत्कृष्टं सूचयति, शिक्षयति, अनुरञ्जयति च।

तत् कथं नु "संस्कृत समाचार-प्रसारणे" एतयोः आकाशवाणी दूरदर्शनयोः-मतैक्यं नास्ति ? नीति-विभेदः च अस्ति ?

"आकाश वाणी" प्रति दिनं प्रातः सायं च (द्विकालम्) संस्कृत समाचारान् प्रसारयति। भारत वास्तव्यान्-भारतेतर देश-वास्तव्यान् च संस्कृतज्ञान् प्रसादयति संस्कृत-अस्तित्वं प्रबोधयति प्रमाणयति च यत् न केवलं भारतेतर देशाः जर्मनी-तत्सम्बद्धाः च-संस्कृत प्रसारणानि कुर्वते अपि तु "भारतम्" अपि संस्कृत-समाचारान् कार्यक्रमान् च प्रसारयति।

किन्तु 'दूर दर्शनम्' संस्कृत समाचारान् न प्रसारयति। का कथा प्रति दिनं द्विकालस्य, एक कालं अपि न प्रसारयति ?

किं दूर दर्शनं "संस्कृतं" प्राभाणिकं न मन्यते ? उत वा उपेक्षते ? उत वा निज मन्त्रालय-नीतिं न अनुसरति ? उत वा तद् विभागे संस्कृतज्ञानाम् अभावः वर्तते ?

किमपि स्यात्। एषा त्रुटिः निराकरणीया वर्तते। एषा त्रुटिः वा नीतिः वा अक्षमता वा दूर दर्शनस्य भारतीयान् क्षोभयति उद्वेलयति च, न चापि शोभते, चित्तमारोहति च।

भारत शासनं प्रति, सूचना प्रसारण-मन्त्रालयं प्रति, तदधिष्ठातारं प्रति, दूरदर्शन-विभागं प्रति च अस्माकं विनम्रम् अभ्यर्थनम् इदं यत् "आकाश-वाण्याम् इव दूर दर्शने" अपि संस्कृत समाचार प्रसारण-व्यवस्था निश्चिता स्यात्, शीघ्र स्यात् अवश्यं च स्यात्।

न केवलं संस्कृते समाचार प्रसारण व्यवस्था स्यात् अति तु सर्वस्मिन् भारते संस्कृत सम्वन्धिन्यः याः याः घटनाः वा वृत्तानि वा कार्यक्रमाः वा भवन्ति तेषामपि प्रसारणम् आकाशवाणी केन्द्रात् दूर दर्शन केन्द्रात् च अवश्यं भवेत्। एतेन अस्माकं "प्रसारण-माध्यमे-निर्दोषता पूर्णता, उत्कृष्टता च समुद्भविष्यन्ति ॥

इति ॥

स्तुतिपद्यानि—

# श्रीहरये नमः

रचयिता—स्वामी सत्यप्रसादः दासः
श्री स्वामिनारायण मन्दिरम्
श्री स्वामिनारायणमार्गः भुज, कच्छ

दयामयी सदा दृष्टिर्मुखे हास्यं सुमंगलम् ।
मधुरं भाषणं यस्य तस्मै श्री हरये नमः ॥1॥

यस्य च वचनं श्रुत्वा तरन्ति भवबन्धनात् ।
कटौ श्वेताम्बरं यस्य तस्मै श्री हरये नमः ॥2॥

दर्शनीयौ करौ यस्य नेत्रे पादौ तथापि च ।
शक्तिश्च महती यस्य तस्मै श्री हरये नमः ॥3॥

सदा यः शुभहस्तेन ददाति चाभयं वरम् ।
अज्ञानतिमिरं हन्ति तस्मै श्री हरये नमः ॥4॥

ख्यातो नाम सहस्रैश्च भक्तानां परमागतिः ।
द्रष्टा च सर्व वेदानां तस्मै श्री हरये नमः ॥5॥

पाखण्डिनां च पाखण्डमज्ञानं यस्तमो मृताम् ।
हन्ति स्वदृष्टिमात्रेण तस्मै श्री हरये नमः ॥6॥

सर्वस्य सर्वदा स्वामी निर्दोष गुण सागरः ।
करोति यः परंश्रेयस्तस्मै श्री हरये नमः ॥7॥

यं पूजन्त्यमरा नित्यं योगिनश्च जनेश्वराः ।
सत्साधु मण्डलं चैव तस्मै श्री हरये नमः ॥8॥

पूर्वं दुष्टं कृतं कर्म हन्ति यो देह धारिणाम् ।
बध्नाति प्रेमपाशैश्च तस्मै श्री हरये नमः ॥9॥

स्वाश्रितान् सर्वदा चैव शत्रुमध्ये च सागरे ।
आपन्नानां हरत्येन स्तस्मै श्री हरये नमः ॥10॥

अज्ञानदूषिते काले ज्ञान ज्योतिः प्रदीपकः ।
साक्षाद्धरिः कृष्णोहि तस्मै श्री हरये नमः ॥11॥

दासभावेन ये भक्ताः नित्यं कुर्वन्ति सेवनम् ।
तेषामज्ञाननाशाय तस्मै श्री हरये नमः ॥12॥

यथाकर्म जनेभ्यश्च सुख दुःखे ददाति यः ।
जनानां गुणरक्षित्रे तस्मै श्री हरये नमः ॥13॥

सदानन्द स्वरूपो यः श्री कृष्णः पुरुषोत्तमः ।
मुमुक्षूणां परं ध्येय स्तस्मै श्री हरये नमः ॥14॥

योगिभिर्ध्यायते चित्ते कविभिर्वाचि गीयते ।
मुनिभिर्वन्द्यतेपादे तस्मै श्री हरये नमः ॥15॥

जना गायन्ति गीतानि शर्मदानि च यस्य वै ।
मोहमायादिकं त्यक्त्वा तस्मै श्री हरये नमः ॥16॥

अक्षरधाम संज्ञो यः दिव्यरूपेण तिष्ठति ॥
निर्गुणः सत्य सङ्कल्प स्तस्मै श्री हरये नमः ॥17॥

यश्चराचर विश्वेशः शान्त शुद्ध स्वरूपवान्
सर्वव्यापक सर्वात्मा तस्मै श्री हरये नमः ॥18॥

नानाविधसुपुष्पाणां मालाभिर्यो विभूषितः ।
विष्णवे वासुदेवाय तस्मै श्री हरये नमः ॥19॥

निजदर्शन दानेन भवदुःख निवारिणे ।
जनेभ्यो भक्तनाथाय तस्मै श्री हरये नमः ॥20॥

# अध्यात्म रामायण-परिचयः

लेखक : शिवदत्त पांडेयः, एम.ए, (हिन्दी संस्कृत)
साहित्याचार्यः, साहित्यरत्नम्
सैनी (सुभाषनगर), इलाहाबाद

लक्ष्मणः — अध्यात्मरामायणमधिकृत्य रामानुजो लक्ष्मणोऽखिलभूभारधरः पन्नगेशो शेषोऽस्ति। एतत्तु सर्वेषु रामकाव्येषु सम्यगभिहितम्। इदमखिलं जगज्जानात्येव। अयोध्यायां विश्वामित्रागमनकाले दशरथस्य समक्षं सर्वेषां परिचय-पुरस्सरं लक्ष्मणस्य जन्मरहस्यं महर्षिः रघुकुलगुरुः वसिष्ठः प्रयच्छति।

"शेषस्तु लक्ष्मणो राजन् राममेवान्वपद्यत।"
बा. का. 4 सर्गे

सुग्रीवेणादिष्टः कोटिवानरपरिवृतः गिरिगहनकन्दरेषु जनकतनयान्वेषणतत्परः अंगदः मासावधिं गमयतिस्म। तथापि किंचिदपि सीतावृत्तांतं न लेभे। स्वजीवितनैराश्यमापन्नः बालितनयोऽङ्गदः केनापि विधिना प्राणत्यागं कर्त्तुमुद्यतो बभूव। किन्तु पवनतनयः तस्य वचनं संश्रुत्य तम्प्रेम्णा सान्त्वयन् रामलक्ष्मणसीतानां तथा वानराणां सम्यग् जन्मरहस्यप्रतिपादनं करोति—

"लक्ष्मणो भुवनाधारः साक्षाच्छेशः फणीश्वरः।"
कि. का. 7 सर्गे

वानराः के सन्ति : — रामकार्ये सहायकाः केचिद्वानराः स्वर्गस्थाः विष्णुपार्षदाः केचिच्चामराः। इमे सर्वेऽमराः ब्रह्मणादिष्टाः स्वर्गान्महीतलमवतीर्य रामस्यहितकारिणो बभूवुः। यथा बालकाण्डे ब्रह्मा स्वयं देवानब्रवीत्—

विष्णुर्मानुषरूपेण भविष्यति रघोः कुले।
यूयं सृजध्वं सर्वेऽपि वानरेष्वंशसम्भवान्॥
विष्णोः सहायं कुरुत यावत्स्थास्यतिभूतले।
इति देवान् समादिश्य समाश्वास्य च मेदिनीम्॥
बा. का. 2 सर्गे

नीतिविशारदः हनुमान् वालितनयमङ्गदं प्रोवाच—

"वयं च पार्षदाः सर्वे विष्णोर्वैकुण्ठवासिनः।"
"वयं वानररूपेण जातास्तस्यैव मायया।"
"इदानीमपि तस्यैव सेवां कृत्वैव मायया।
पुनर्वैकुण्ठमासाद्य सुखं स्थास्यामहे वयम्।"
कि. का. 7 सर्गे

दशरथः — अयोध्यानरेशदशरथविषयेऽध्यात्मरामायणे पूर्णस्पष्टं विवरणं दीयते। पुरा ब्रह्मणः सुतः कश्यप नामा प्रजापतिः देवमाता आदितिश्च युगपदेव वनमुपगम्य विष्णुध्यानतत्परौ भूत्वा महत्तपस्तेपे तयोरविरलतपश्चरणेन भगवान्विष्णुः तुतोष तत्समक्षमागत्योवाच—"राजन् वरं ब्रूहि।" भगवतः कर्णामृतवचः संश्रुत्य कश्यपो भगवन्तमुवाच—"भवान् स्वयं मम पुत्रतामेहि।" स एव कश्यपोऽग्रजन्मनि अयोध्यानरेशो दशरथो बभूव तथा देवमातादितिः तस्य भार्या कौसल्याभवत्। यथा विश्वामित्रस्यायोध्यापदार्पण काले वसिष्ठो राजानं निर्दिशति—

त्वं तु प्रजापतिः राजन् कश्यपो ब्रह्मणो सुतः।
कौसल्या चादिति देवी देवमाता यशस्विनी॥
भवन्तौ तप उग्रं वै तेपाथे बहुवत्सरम्।
तदा प्रसन्नोभगवान् वरदो भक्तवत्सलः॥
वृणीष्व वरमित्युक्ते त्वं मे पुत्रो भवामल।
—बा. का, 4 सर्गे

रावणः— रावणजन्मविषयेऽध्यात्मरामायणं निश्शेषभावेन वाल्मीकिरामायणमनुसरति। इतिस्पष्टं दृश्यते।

रात्रगस्तु महामुनेः पुलस्त्यस्य पौत्र आसीत् तथा विश्रवसः कैकस्याः गर्भादजायत । अतः सः विश्रवसः सुत आसीत् । विशाल शैलसमाकारः कुम्भकर्णः रावणस्यानुजः, शूर्पणखा नाम तस्य सोदरी आसीत् । शान्तात्मा, सौम्यदर्शनः भगवत्भक्तः विभीषणः तस्यानुजोऽभवत् यः पाश्चात्पाद प्रपीडितः रामस्य पक्षं समागतः । वरप्रभावात् सो राक्षसाधिपः मुनीनां त्रासविग्रहः देवद्विजपीडकः उन्मत्तोभूत्वाखिललोकेषु निर्भयं विचचार । हिरण्यगर्भाङ्गभुवा श्री सनत्कुमारेण सोऽजानात् यत् ये निशाचराः विष्णुना हन्यन्ते ते निश्चप्रचमेव विष्णुलोकंप्राप्नुवन्ति तत्रैव नित्यं रमन्ते किन्तु देवैर्निहताः तमीचराः स्वर्गं गत्वा भोगक्षये पुनः स्वर्गाद्भ्रष्टा भूमावुद्भवन्ति । रावणः भगवत्स्वरूपवेत्ता हृदयसन्निहितभगवत्प्रेमतत्वः भगवतः विष्णोः करेण आत्मनः वधमियेष । अतोऽतीव बुद्धिमान् लंकाधिपतिः रावणः हरिणात्मवधकांक्षया दण्डकारण्यात् जानकीं जहार । रामेण हतः रावणोविष्णुसायुज्यमाप्तवान् । वस्तुतस्तु रावणो रामस्य न शत्रुरिति रामायणस्योत्तरकाण्डावलोकनात् सम्यग् विज्ञातुं शक्यते ।

आध्यात्म सन्देशः—अध्यात्मरामायणेविविधिस्थलेषु गूढ़ज्ञानोपदेशाः दृश्यन्ते, ये इहलोके मानवानांकृते अतीवोपकारकाः । अरण्यकांडे चतुर्थे सर्गे भगवान् श्रीरामः लक्ष्मणाय मायायाः गुह्यतमं स्वरूपं ज्ञानविज्ञान साधनं निवेदयति । अयं प्रसंगोऽतिगूढः । तृतीय सर्गे महर्षिरगस्त्यो मूल प्रकृति-मायाविराट् पुरुषोत्पत्ति-ब्रह्माण्डनिकायादीनां सूक्ष्मतमं विवेचनं करोति यद्योगिनां कृते परमं पथ्यं हितं चापि किष्किन्धाकांडे भगवान् श्री रामः स्वयं स्वपूजायाः विधानं महताविस्तरेण लक्ष्मणं प्रति वर्णयति ।

"श्री रामहृदयं" नाम बालकाण्डस्यप्रथमः सर्गः अध्यात्मरामायणस्य निगूढ़तमः लोकमोक्षप्रदः सारसंग्रहोऽस्ति । इदं "रामहृदयं" रामेणोक्तं पुरा, तदनन्त रंच महादेवेन पार्वतीं प्रत्यभिहितं । अस्मिन् सर्गे सीतारामयोः यथार्थस्वरूपो विविच्यते ।

अथचोत्तरकांडे "रामगीता" नाम्नि पंचमे सर्गे ज्ञानविज्ञानयोर्महन्निरूपणमस्ति । अस्मिन् सर्गे सर्वोपनिषदां वेदान्तानाञ्च निष्कर्षः द्रष्टुं शक्यते । यथा अज्ञानमेवास्य जगतः मूलकारणं । अज्ञानस्य निराकरणमेव भवमुक्तेः विकल्पः । ज्ञानमेवाज्ञानं हन्तुंम् प्रभवति न तु कर्म --

अज्ञानमेवास्य हि मूलकारणम्,  
तद्धानमेवात्र विधौविधीयते ।  
विद्यैव तन्नाशविधौ पटीयसी,  
न कर्म तज्जं सविरोधमीरितम् ॥

इदं रामगीता रहस्यं परमात्मना श्री रामेण स्वयमेव सौमित्रिं प्रति अतिशयवात्सल्येन वर्णितम् ।

कर्म विद्यायाः वैपरीत्यमाचरति, अतः परमात्मतत्वजिज्ञासुः ज्ञानार्थी अखिलं कर्म त्यजेत् । परमात्मानं जीवात्मानमन्तरा तयोर्विभेदकरं केवलमज्ञानमेवास्ति । सततप्रकाशमयं विज्ञानं परमात्मनः आत्मनोश्च भेदं (पार्थक्यं) विनाशयति । यथोक्तम्---

तस्मात्यजेत्कार्यमशेषतः सुधीः ।  
विद्याविरोधान्न समुच्चयो भवेत् ॥

अथ च—

यदा परात्मात्मविभेदभेदकम्,  
विज्ञानमात्मन्यवभाति भास्वरम् ।  
तदैवमायाप्रविलीयतेऽञ्जसा,  
सकारका कारणमात्म संसृतेः ॥

आत्मा अजन्मा, अविनश्वरः, अजरोऽमरोऽक्षुण्णः, प्रकाशमानोऽद्वितीयश्चास्ति--

कदाचिदात्मान मृतो न जायते,  
न क्षीयते नापि विवर्धतेऽनवः ।  
निरस्तसर्वातिशयः सुखात्मकः,  
स्वयंप्रभः सर्वगतोऽयमद्वयः ॥

ईश्वरः प्रकाशरूपः, विशुद्धविज्ञाननिधानः, निरामयोऽक्रियश्च । भगवान् स्वयं स्वपरिचयं स्वरूपं प्रयच्छति । अवलोक्यताम्—

प्रकाशरूपोऽहमजोऽहमद्वयो-  
ऽसकृद्विमातोऽहमतीवनिर्मलः ।  
विशुद्धविज्ञानघनो निरामयः,  
सम्पूर्ण आनन्दमयोऽहमक्रियः ॥

अस्मिन्नेव सर्गे प्रान्तभागे प्रणवस्य महती विस्तीर्णा व्याख्या भगवतावेदव्यासेन निरूपिता/या विस्तरभयादत्र न दीयते ।

उपसंहारः — उपर्युक्तविवेचनमधिकृत्य समासेनेदं वक्तुं शक्यते यदध्यात्मरामायणे वेदवेदांगनां, योगदर्शन वेदान्ततत्वानां, क्रिया-योग-ज्ञान - भक्ति-साधन-महत्व-मोक्षादीनां सन्देहसन्दोहविनाशकरम् । अस्मिन्नति ज्ञानागारे शुभप्रदे रामायणे सप्तकाण्डानि, चतुष्षष्टि (64) सर्गाः, शतद्वयाधिक चतुस्सहस्रम् (4200) श्लोकाः तेषामन्तर्वर्तिन्यः शतशः श्रुतयः महर्षिणा प्रकीर्तिताः

रामायणस्यास्य पठनपाठन-श्रवण-चिन्तन-गायन-संकीर्तन-गायनादिभिर्मनुष्याः जन्मशतार्जितैः पापैः विमुच्यन्ते । देवा अपि तेषां भूविलासमवलोकयन्ति । अस्य माहात्म्यं न केनचिदपि वक्तुं शक्यते । तथापि—

अध्यात्मरामायणतः श्लोकं श्लोकार्धमेववा ।
यः पठेत् भक्तिसंयुक्तः स पापात् मुच्यते क्षणात् ।
यो गायते मुदाध्यात्मरामायणमहर्निशम् ।
आज्ञां तस्य प्रतीक्षन्ते देवा इन्द्र पुरोगमाः ।।
पठन् श्रीरामहृदयं तुलस्यश्वत्थयोर्यदि ।
प्रत्यक्षरं प्रकुर्वीत ब्रह्महत्यानिवर्तनम् ।।
—माहात्म्य वर्णने

अपि चोक्तमुत्तरकाण्डान्ते—

रामायणं काव्यमनन्तपुण्यम्
श्रीशंकरेणाभिहितं भवान्यै ।
भक्त्या पठेद्यः श्रृणुयात्स पापै-
र्विमुच्यते जन्मशतोद्भवैश्च ।।
अध्यात्मरामं पठतश्च नित्यं,
श्रोतुश्च भक्त्यालिखितश्च रामः ।
अतिप्रसन्नश्च सदासमीपे,
सीता समेतः श्रियमातनोति ।।

किं बहुना प्रलापेन ।

अस्मिन् निबन्धे च्युतयश्च विद्वद्वरेण्यरवश्यमेव क्षन्तव्याः यतोहि—

अस्पष्टाक्षरमुल्लापं बालो यदि करोति नु ।
विज्ञाः तत्र प्रसीदन्ति क्षन्त्वा तस्यत्रुटिमुदा ।।

।।इति।।

छात्रस्तम्भः

# हसनानि

सुनील कुमार
बी. ए., द्वितीय वर्ष
दिल्ली

(1)

एकः तस्करः एकम् ऐन्द्रजालिकम्प्रति गत्वा उवाच—कलाप्रदर्शनसमये विलोपीकृताः भवता सर्वाः मुद्राः । कथम् ? अहमपि ज्ञातुम् इच्छामि' ।

'किमर्थम् ?' पृष्टः स प्रत्युवाच

'सम्प्रति कृष्णधनस्य कुलक्ष्मेः रक्षार्थं ज्ञातं मया यदद्य मम गृहे आरक्षकाः आगत्य मम धनम् अपहरिष्यन्तीति । रक्ष माम् ।'

ऐन्द्रजालिकः अकथयत् —'सर्वम् धनम् आनय समादाय अहम् अपि अन्तर्धानं गमिष्यामि, किम् धनम्'

(2)

अध्यापकः—मोहन ! त्वया किमर्थम् कक्षायाम् श्वा आनीतः ?

मोहनः—अस्य पृष्ठे मया लिखितः लेखः ।

अध्यापकः—किम् ? किमर्थम् ?

मोहनः—भवता तु कथितम् आसीत् श्वानोपरि लेखं लिखित्वा आनय ।

(3)

प्रशंसकः चित्रकारं प्रति — किमर्थम् भवता सर्वे पशवः स्वचित्रेषु जलनिमग्ना प्रदर्श्यन्ते ?

चित्रकारः—यत् अहम् तेषां खुरान् चित्रणेऽसमर्थः, न पारयामि, अतः ते जले एव सर्वे क्रीडन्ति ।

(4)

अध्यापकः - काला के के भवन्ति ?

छात्रः — चत्वारः ।

अध्यापकः—के के गणय ?

छात्रः—वर्तमान, भूत, भविष्यत्, आपत् कालश्च ।

# आरक्षणस्य न फलं लभतेऽसमर्थः

-- चुन्नीलाल शुक्ल, साहित्याचार्य, एम.ए. (हिन्दी, संस्कृत)
पता : 23 सुभाष नगर, गली नं० 1, मेरठ (सिटी)

ज्ञानस्य कोशमतुलं समवाप्य शिक्षां,
कृत्वा श्रमं विविधशिक्षणमन्दिरेषु !
क्रोशन्ति ते स्वजननं हि सवर्णजातौ,
योग्याः श्वसन्ति विहरन्ति च वृत्तिहीनाः ॥1॥

आरक्षणेन विविधानि पदानि लब्ध्वा,
शिक्षाविवेकरहिता दलिता हि जात्या ।
योग्याः न सन्ति तदपीह हसन्ति योग्यान्'
सर्वोच्चवर्णशिशवः क्षुधया स्वपन्ति ॥2॥

सम्प्राप्य शासकपदं नहि तत्र शक्ताः,
संचालने न कुशला उपहासभाजः ।
देशं नयन्ति पतनाभिमुखं च तस्य,
कीर्तिं स्वमानमुदयं परिहापयन्ति ॥3॥

पूजा गुणैर्भवति यत्र सदा प्रसिद्धा,
जातिर्वयो न जननं कुलजं न लिंगम् ।
तत्रैव सम्प्रति विधीयत एव जाते-
संरक्षणं न भविता प्रगतेर्हि हेतुः ॥4॥

सर्वासु जातिषु सदा पतिता बभूवु-
रद्यापि सन्ति मलिना दलिताश्च दीनाः ।
सर्वोच्च जाति जनिताः प्रथिता महान्तः,
भूमौ स्वपन्ति वसनेन विहीनगात्रा. ॥5॥

शूद्रेषु सन्ति धनिनो विभवेन पूर्णाः,
जात्या न कोऽपि दलितो न च निर्धनोऽस्ति ।
सर्वे समानविभवाः समरक्तवन्तः,
जातिर्न कापि मलिना मलिनैव व्यक्तिः ॥6॥

आरक्षणं न भविताऽभ्युदयाय किञ्चित्,
योग्याः पिबन्त्यपकृतेर्जलमद्य मूकाः ।
सम्प्राप्य माननपदं विलसन्त्ययोग्याः,
हृष्यन्ति बुद्धिरहिता विभवेन मत्ताः ॥7॥

आरक्षणस्य न फलं लभतेऽसमर्थः,
लाभं स एव लभते विभवेन पूर्णः ।
दीनस्तु दीनवदनो भ्रमतीह नित्यं,
शक्तः पदं समधिगम्य यशस्तनोति ॥8॥

आरक्षणस्य दलितो न च निर्धनोऽत्र,
लब्धुं न लाभमखिलं प्रभविष्यतीति ।
प्राप्स्यन्ति ते दलितवंशभवस्य लाभम् ॥9॥

वृत्तिं विना करुणया सह जीवयन्तः,
मार्गे स्वपन्ति वसनेन विना गृहेण ।
विद्याविवेकुशलाः गुणिनां वरेण्या-
क्रोशन्ति शासनमिदं स्वसवर्णजातिम् ॥10॥

वृत्तेरभावदयनीयदशामवाप्य,
व्यर्थश्रमा परिभवानलदग्धगात्राः ।
धिग्जीवनं द्विजजनिं प्रविचार्य चित्ते,
प्राणांस्त्यजन्ति दहनेन महोच्चवंशाः ॥11॥

छात्रास्तथा युवतयः प्रतिभाप्रसन्नाः,
सम्मानितेषु च पदेषु विराजमानान् ।
तान्योग्यताविरहितान्दलितांश्च दृष्ट्वा,
दग्ध्वा ! तनुं जहति बन्धुजनांश्च प्राणान् ॥12॥

आरक्षणं न विभवाय रणाय नूनं,
राञौ भविष्यति दिवा सदनेषु युद्धम् ।
निम्नोच्चवर्णनिवहेषु कथा रणस्य,
देशस्य नंक्ष्यति यशः प्रगतिश्च गन्त्री ।13।
सर्वेऽपि विभ्यति मिथः प्रतिवेशिनोऽपि,
देशस्य सम्पदमथो परितः दहन्ति ।
रक्तस्य पातमतिनिन्दितकर्म कृत्वा,
आरक्षणेन निखिलोज्ज्वलतीह देशः ।14।
देशे क्वचिद्धि दहनं क्वचिदत्र हिंसा,
छात्रा न सन्ति ननु शिक्षणमन्दिरेषु ।
मार्गे भ्रमन्ति न पठन्ति विवेकशून्याः,
क्रोशन्ति शासनमिदं मतलोलुपानाम् ।15।
आरक्षणेन भविता प्रतिभा समाप्तिः,
बुद्धिक्षयोमतिमतामपमानहेतुः ।
प्रज्ञा प्रणंक्ष्यति यदा क्षयमेति सर्वं,
नारक्षणं हि विभवाय रणाय नूनम् ।16।
आरक्षणस्य कृपया न च भिक्षया वै,
लाभो भवेद्धि दलितस्य जनस्य कोऽपि ।
बुद्धेश्च हानिरतुला प्रगतेर्हि नाशः,
आलस्य बुद्धिरिह मानवताविनाशः ।17।
मतस्य नीतिं परिपालयन्तः,
स्वकर्ममार्गेण न यान्ति केचित् ।
यथा पदं हस्तगतं भवेद्वै,
तथैव कर्तुं सततं यतन्ते ।18।
स्वदेशमानं सकलं विहाय,
मताय तुष्टीकरणं विधीयते ।
पदाय हिंसामपि कारयित्वा,
नयन्ति देशं पतनाभिगतें ।19।
विभेदनीत्या यवनान्प्रतोष्य,
विदेशरीत्या कपटेन लोकान् ।
पदाय सर्वानपि योधयित्वा,
मतस्य कोषं परिवर्द्धयन्ति ।20।
हे राम पश्य सदने तव किंच जातं,
हिंसेह नृत्यति विरौति च लोकशान्तिः ।
धूर्ता प्रशासनपदं समवाप्य देशे,
स्वैरं हरन्ति विभवं च यशो द्विजानाम् ।21।

# महाकवि: कालिदासः

—कविवैद्यः काशीराम शर्मा शास्त्री, तरन तारन, जिला अमृतसर (पंजाब)

श्रीकालिदासेन कृतो विकासः ।
यस्मिन् कृतः शारदया निवासः ।
दृष्टः कविस्त्वेषु मते विलासः ।
लोके प्रसिद्धः कवि कालिदासः ॥1॥

कवि प्रमुख्येषु सदाग्रगण्यः ।
मान्येषु मान्यश्च बभूव धन्यः ।
जातः सुपुत्रश्च वरो जनन्याः ।
लोके प्रसिद्धः कविकालिदासः ॥2॥

चकार काव्यानि च नाटकानि ।
सर्वत्र विख्याततराणि यानि ।
शुभान्यलङ्कारयुतानि तानि ।
लोके प्रसिद्धः कवि कालिदासः ॥3॥

रसा गुणा रीतियुता वसन्ति ।
ग्रन्थेषु यस्य प्रवरा लसन्ति ।
दोषै विहीना रचनाश्च सन्ति ।
लोके प्रसिद्धः कवि कालिदासः ॥4॥

विख्यात कीर्तिश्च महाकविः सः ।
प्रकाशमानश्च यथा रविः सः ।
तथा यशस्वी च वृहच्छविः सः ।
लोके प्रसिद्धः कवि कालिदासः ॥5॥

विदेशिनो यस्य गुणान् स्मरन्ति ।
यं शेक्सपीयेरसमं वदन्ति ।
ग्रन्थांश्च यस्य प्रवरान् पठन्ति ।
लोके प्रसिद्धः कविकालिदासः ॥6॥

य उज्जयिन्याः शुभरत्नभूतः ।
यो देववाण्या च कृतः सुपूतः ।
यो भारते देशवरे प्रसूतः ।
लोके प्रसिद्धः कवि कालिदासः ॥7॥

यो व्यास बाल्मीकिसमो विभाति ।
पूतः स लोकान् सकलान् पुनाति ।
योऽसौ सुगन्धिं सततं ददाति ।
लोके प्रसिद्धः कवि कालिदासः ॥8॥

# सदाचारः

आचार धर्मो धरणीं दधाति ।
कीर्तिंतनोतीति यशो ददाति ।
यस्माच्च शोभां परमां प्रयाति ।
जनः सदाचारयुतो विभाति ॥1॥

यद् यज्जनः श्रेष्ठतरः करोति ।
तत्तच्च तस्यानुकरः करोति ।
तस्य प्रमाणं सुनरः करोति ।
जनः सदाचारयुतो विभाति ॥2॥

पूता न दुष्टाऽऽचरणा भवन्ति ।
साङ्गान् सुवेदान् यदि ते पठन्ति ।
आचार हीना हि जनाः पतन्ति ।
जनः सदाचारयुतो विभाति ॥3॥

आचारपूताः हि जनास्तरन्ति ।
स्वर्गापवर्गादिपदं व्रजन्ति ।
भागस्य लोके सफला भवन्ति ।
जनः सदाचारयुतो विभाति ॥4॥

शृंगानि पुच्छानि न ते दधानाः ।
आचारहीनाः पशुभिः समानाः ।
ते भूमिभारा मनुजाभिधानाः ।
जनः सदाचरयुतो विभाति ॥5॥

स्वास्थ्यानि नष्टानि तथा धनानि ।
स्वल्पा मतेयं यदि चास्ति हानिः ।
आचारहीनानि न जीवनानि ।
जनः सदाचारयुतो विभाति ॥6॥

आचाररक्षा तु सदैव कार्या ।
आचारहीनास्तु जना अनार्या ।
आचारधर्मः परमोऽस्ति धार्यः ।
जनः सदाचारयुतो विभाति ॥7॥

एकस्तु धर्मः परमः सुखार्थी ।
तथा मृतानामपि यो हितार्थी ।
कृतो जनो येन सदा कृतार्थी ।
जनः सदाचार युतो विभाति ॥8॥

# भोजराज यशोगाथा

—राम रतन शास्त्री

( 1 )

कदाचिद् राजानं निरन्तरं दीयमानं विलोक्य मुख्यामात्यो वक्तुमशक्तो राज्ञः शयन-भवन-भित्तौ कानि अक्षराणि लिखितवान्—

"आपदर्थे धनं रक्षेत्" ।

राजा शयनादुत्थितो गच्छन् भित्तौ तानि अक्षराणि वीक्ष्य स्वयं द्वितीयं चरणं लिलेख—

"श्रीमतामापदः कुतः" ॥

अपरेद्युः मुख्यामात्यो द्वितीयं चरणं दृष्ट्वा स्वयं तृतीयं चरणमलिखत्—

"सा चेदपगतालक्ष्मीः" ।

परेद्यू राज्ञा चतुर्थं चरणं लिखितम्—

"सञ्चितार्थो विनश्यति" ॥

ततो मुख्यामात्यो राज्ञः पादयोः पतति कथयति च— "देव, क्षन्तव्योऽयं ममापराधः ॥इति

( 2 )

एकदा धाराधीश्वरमुपरि सौधभूमौ शयानं सत्वा कश्चिद् द्विज-चौरः खात-पातपूर्वं राज्ञः कोशगृहं प्रविश्य बहूनि विविधरत्नानि वैडूर्यादीनि हृत्वा तानि परलोक ऋणानि मत्वा तत्रैव वैराग्यमापन्नो विचारयामास —

"यद्व्यङ्गाः कुष्ठिनश्चान्धाः पंगवश्चदरिद्रिणः,
पूर्वोपार्जित पापस्य फलमश्नन्ति देहिनः ॥"

ततो राजा भोजः निद्राक्षये दिव्यशयन स्थितो विविध मणि कङ्कणालङ्कृतं दयितवर्गदर्शनीयमालोक्य गजतुरगरथपदाति सामग्रीं च चिन्तयन् राज्यसुखसन्तुष्टः प्रमोदभरादाह—

चेतोहरा युवतयः सुहृदोऽनुकूलाः
सद्बन्धवाः प्रणयगर्भगिरश्च भृत्याः
वल्गन्ति दन्तिनिवहास्तरलास्तुरङ्गाः

इति चरणत्रयं राज्ञोक्तम् । चतुर्थ-चरणं राजोमुखात् न निःसरति तदा चौरेण श्रुत्वा पूरितम्—

"सम्मीलनेनयनयोः नहि किञ्चिदस्ति" ॥

ततो प्रथितग्रन्थो राजा चौरं वीक्ष्य तस्मै 'वीरवलय' मदात् । ततस्तस्करो 'वीरवलय' मादाय ब्राह्मणगृहं गत्वा शयानं ब्राह्मण मुत्थाप्य तस्मैदत्वा प्राह —विप्र, एतद् राज्ञः पाणिवलयं बहुमूल्यः अल्पमूल्येन न विक्रेयम् ।

ततो ब्राह्मणः पण्यवीथ्यां तद्विक्रीय दिव्य भूषणानि पट्टदुकूलानि च जग्राह । ततो राजकीयाः पुरुषाः केचन एनं चौरं मन्यमानाः राज्ञो निवेदयन्ति आनयन्ति च तं राजनिकटम् । राजा पृच्छति— बिटघायं पटमपि नास्ति । अद्य प्रातरेव दिव्य कुण्डलाभरणादीनि कुतः ? विप्रः प्राह—

"भेकैः कोटरशायिभिः मृतमिवक्ष्मान्तर्गतं कच्छपैः ।
पाठीनैः पृथु पङ्कपीठ लुठनाद्यस्मिन्मुहु मूर्च्छितम् ॥
तस्मिन् शुष्क सरस्य काल जलदेनागत्य तच्चेष्टितम् ।
यत्राकुम्भ निमग्न वन्य करिणां यूथैः पयः पीयते ॥"

तुष्टो राजा तं 'वीरवलयं,' चौर-प्रदत्तं निश्चित्य स्वयं च तस्मै लक्षं ददौ ॥ —भोजप्रबन्धात्—संक्षिप्य

# उग्रतमा परीक्षा

डा० रामसरूपः रसिकेशः, डी-141,
राजेन्द्र नगर, दिल्ली-60

अस्यां धरण्यां यद्यपि प्रत्यहं अगणनीयाः जना जायन्ते म्रियन्ते च तथापि तेषां नामानि कर्माणि च तत्पुत्रपौत्रैरेव ज्ञायन्ते न च तत्प्रपौत्रप्रभृतिभिः । परन्तु केचन बभूवुः तेऽपि अस्माकं प्रातः स्मरणीयाः पूर्वजा येषां नामानि सुकर्माणि च स्मृत्वा न केवल वयं परम प्रसन्नतां प्राप्नुमोऽपिताननु कर्तुमपि उत्सहामहे ।

तादृशेष्वेव महापुरुषेषु गण्यते महाराजः शिविः । तत्सम्बधिनी शरणागत वत्सलतायाः शिक्षा प्रदायिका श्येनकपोतकथा तु लोके विश्रुतैव । अतस्तत्पुनराख्यानमनाव श्यकमेव । अत्र तु तत्सम्बधिनी अन्यैका कथा उपन्यस्यते यया शिवेः अनुपममातिथेयत्वं विप्रपूजकत्वञ्च सम्यक् स्फुटीभवति ।

यदा गन्धारसमीपवर्तिनि उशीनर प्रदेशे शिवेर्गुणानां सर्वत्र प्रसारोऽभूत्तदा भगवान् विष्णुः तस्मै विप्रपूजकत्वस्य परीक्षार्थमुद्यतोऽभवत् । असौ विप्रवेषं धृत्वा शिवि मुपागच्छत् भोजनञ्च अयाचत । परन्तु एतदपि स्पष्टमकरोत् यत्तव पुत्रमांसात् ऋते नाहं किमपि भक्षयिष्यामि । अथ चासौ बृहद्गर्भनामा बालो स्वयैव हन्तव्यः पचनीयश्च । एतदाकर्ण्य अतिथिदेवः शिविः स्वसुतं स्वहस्तेन हत्वा तन्मांसमपचत्, विप्रपरितोषाय । तदनु यदासौ तन्मांसं भक्षणार्थं विप्रसमीपे उपास्थापयत् तदा विप्र उवाच पूर्वं त्वमेवेदं भक्षय ततोऽहं भक्षयियामि । तदा शिविः स्वसुतस्य पक्वं शीर्षं गृहीत्वा खादितुमुद्यतः । शिविमुग्रतमायां परीक्षायामपि उत्तीर्णं दृष्टवा भगवान् विष्णुः परम प्रसन्नतां प्राप्नोत् तत्सुतञ्च पूर्ववत् सप्राणं कृत्वा क्षणेन अदृश्योऽभवत् ।

# काश्मीर प्रसंगः

आचार्य रामकिशोर शर्मा
श्री राधाकृष्ण सं. विद्यालय खुरजा यू. पी.

काश्मीरे अद्यापि हिन्दूमन्दिराणामपमानः, साम्प्रदायिकविद्यालयानां प्रचारः शासकीयविद्यालयबहिष्कारः, अल्पसंख्यकहिन्दूनां तिरस्कारः, भारतीयध्वजस्य प्रज्वलनं, पाकिस्तानध्वजस्योत्तोलनम्, मस्जिदाभिधस्थानेभ्यो हिन्दुविद्रावणघोषणा, मदनुसारं लक्षाधिकहिन्दुसिखानां पलायनम्, पाकिस्तानसमर्थकवातवरणम्, विगत शासनस्य दुर्नीतेरेव फलम् । सर्वविधसौविध्यमधिगत्यापि साम्प्रदायिकमुस्लिमजनतयाः पाकपरत्वं नूनमेव किमपि देशद्रोहात्मकं षडयन्त्रं सूचयति ।

श्री जगमोहनेन काश्मीरप्रदेशस्य राज्यपालपदस्य त्यागपत्रं दत्तमित्यवगत्य संक्षुब्धानि जातानि आसन् मनांसि राष्ट्रियजनानां । कानिचिद् राजनैतिकदलानि तन्नियुक्तिसमयादेवविरोधमकुर्वन्त आसन् दुर्भाग्यवशाद्शासनमपि तदनुगामि जातम् । नेशनलकान्फ्रेन्स-इन्दिराकांग्रेसदल द्वयस्य सम्मिलितशासनावसर एव तत्र पृथकतावादिनो देशद्रोहिणः शक्तिशालिनोऽभवन् । पकिस्तानसमर्थकाः जनाः राष्ट्रियसेवासु प्रविष्टाः ।

निकटएवानेहसि दिल्ल्यां साम्प्रदायिकतानिरोधार्थं तथाकथित धर्मनिरपेक्षराजनैतिकदलानामधिवेशनमभवत् । तत्र देशस्याखण्डतायै साम्प्रदायिकपृथकतावादिनो नियन्त्रणार्थं प्रस्तावाः पारिता आसन् । अनेनैवोपक्रमेण सुस्पष्टं भवति यदखण्डताविरोधिन एव साम्प्रदायिका इति प्रायः सर्वे स्वीकुर्वन्ति । तथापि न जाने कथमिमे नेतारः खालिस्तानसमर्थकानां पाकिस्तानसमर्थकानाञ्च काश्मीरवास्तव्यानां समर्थनं कुर्वतो न निन्दन्ति । तद्विरुद्धं य एतान्निन्दन्ति । कथमपि देशस्य खण्डनं नेच्छन्ति, देशस्यास्मितां रक्षितुं निरन्तरं प्रयासं कुर्वन्ति, भारतं विहाय येषां कुत्रापि निष्ठा नास्ति, स्वर्णिममतीतमनुस्मृत्य ये गौरवमनुभवन्ति । कलङ्कचिह्नानि पराजयोद्भवानि विनाशयितुञ्च वाञ्छन्ति तान् साम्प्रदायिकान् ब्रुवन्ति, कीदृशीयं विडम्बना । श्री जगमोहनेन स्वयोग्यतया पवित्रतमया च राष्ट्र भक्ति भावनया पाकपक्षपातिनो पृथकतावादिनो नियन्त्रिताः राष्ट्रीयजनताया विश्वासोऽधिगतः । शासनं तमाहूय जनभावनाया निरादरमकरोत् ।

एकत्र साम्प्रदायिकता विरोधिनाटकमपरत्र तदुन्मूलनपरमधिकारिणं पदच्युतं विधाय साम्प्रदायिकत्वपोषणं विचित्रेयं राष्ट्रियता । प्रायः सर्वत्र बहुसंख्यकमानवसमुदायस्यैव धर्मो राष्ट्रधर्मो भवति । परन्तु भारते सर्वसम्मतं सिद्धान्तममुपेक्ष्य विलक्षणा धर्मनिरपेक्षताङ्गीकृता । सर्वधर्मानुयायिनः समसौविध्यभाजो भवन्तु । विषयेऽस्मिन्नास्ति काप्यापत्तिः किन्तु नीतिरियं सम्प्रदायानुसारं सौविध्यं प्रदाय न केवलमेकतां हन्ति, पृथकतावादमपि जनयति । अन्यः वैदेशिकधर्मतुष्ट्यर्थं क्रियमाणं शासनकृत्यं साम्प्रदायिकतां पुष्णाति । यस्य धर्मस्याविर्भावो भारतेऽभवत् स एव भारतीयधर्मः । येषां जन्म विदेशेषु जातन्ते वैदेशिकाधर्माः । तेऽपि चलन्तु परन्तु राष्ट्रीयधर्मरक्षणार्थं सर्वविधप्रयासो भवतु, एतदर्थंसर्वैरेवास्माभिर्यतनीयम् । राष्ट्रियमहापुरुषाणां सर्वैः समादरो विधेयः नेतृभ्रान्तिनिराकरणार्थं बद्धपरिकरैर्भाव्यम् ।

व्यंग्यपद्यानि-

# प्रश्नोऽयं बहु बाधते

प्रशस्य मित्र-शास्त्री
बी-29, आनन्द नगर, बरेली यू.पी.-224001

प्रत्याशिनम् अपृच्छत् वै मतदाता तु कश्चन,
तस्यप्रश्न समाकर्ण्य प्रत्याशी प्रत्युवाच यत्,
महत्वं लभते नैव प्रश्न एष परन्त्वहम् ।
पराजितो भविस्यामि यदि निर्वाचने तदा,
करिष्यामि किम् ? इत्येष प्रश्नो मां बहु बाधते ॥

## यथा संख्यं यथाक्रमम्

पूर्वं साधारणं पत्रं तत्पश्चात् तारपत्रकम्,
प्राप्याश्चार्यं न कर्त्तव्यं श्रूयतामत्र कारणम् ।
पणिनेरस्ति निर्देशो यथाख्यं यथाक्रमम्, डाक-तार विभागस्य प्रवृत्तिरपि वै तथा प्रमाणं पाणिनिं कृत्वा कार्यमेष करोत्यतः, पूर्वमायान्ति पत्राणि तत्पश्चात् तारपत्रकम् ॥

## सीमेन्टं नैव प्राप्यते

सीमेन्टस्य नवा फैक्ट्री योजनायां हि स्वीकृता ।
तदभावं निराकर्त्तुं यथाशीघ्रं प्रयत्नतः ।
दुःख मेतत् परं तावद् वर्त्तते महदत्र यत् ।
फैक्ट्रीभवन निर्माणे सीमेन्टं नैव प्राप्यते ॥

## मृग्याः सिंहः पलायते

कार्यालये तु वेपन्ते यद्भयात् कर्मचारिणः,
वीरविक्रमसिंहोऽभूत् नाम तस्य नरस्य वै ।
गृहे भार्याभियादेष उच्चैरपि न भाषते,
पूर्वजैः सत्यम् उक्तं यद् "मृगात् सिंहः पलायते" ॥

विचार लेख:

# कर्तेति नैयायिकाः

श्री सुब्रह्मण्य सामकः M. A. B. Ed
न्यायशास्त्र विद्वान्
संस्कृताध्यापकः केन्द्रीय विद्यालयः
I N S माण्डवी, वेरेम्, गोवा 403109.

यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः।
तदा शिवमविज्ञाय दुःखस्यान्तो भवेदिति ॥1॥

परम कारुणिकेन मुनिना पाक्षिल स्वामिना स्वीये भाष्ये जगतः उद्धिदीर्षया व्याख्यायी यत् ईश्वरमविज्ञाय दुःखध्वंसात्मकः मोक्षः अप्रतिपाद्य भवेदिति। अतः ईश्वर एव परमार्थतो ज्ञेयः इत्याशयः।

ईश्वरास्तित्वे न प्रत्यक्षं प्रमाणम् इन्द्रियागोचरत्वात्। नोपमानमु रूपाभावात्। वेदानामपि ईश्वरोक्तत्वादेव प्रामाण्यात् ईश्वरस्य प्रत्यक्षासिद्धत्वात् अनुमानमेव प्रमाणम्। तथा च उक्तम्—

कार्यायोजनधृत्यादेः पदात् प्रत्येतः श्रुतेः।
वाक्यात्संख्याविशेषाच्च साध्यो विश्वविदव्ययः ॥
जगतः निमित्तकारणत्वेन ईश्वराभ्युपगमे।

स्वरूप सम्बन्धावच्छिन्न कार्यत्वमुद्दिश्य विषयता सम्बन्धावच्छिन्न कारणता निरूपित समवायसम्बन्धावच्छिन्न जन्यत्वं विधीयते प्रागभाव प्रतियोगित्वाद्धेतोः। यथाश्रुत क्षितित्वस्य पक्षता वच्छेदकत्वे सामानाधिकरण्येन साध्यसिद्धौ घटे अंशतः सिद्धसाधनम्। अवच्छेदकावच्छेदेन साध्यसिद्धे रुद्देश्यत्वे परमाणौ बाधः। जन्य क्षितित्वे वैयर्थ्यं विकल्पासहत्वात् इति स्वरूपसम्बन्धावच्छिन्न कार्यत्वमुद्दिश्यैव सकर्तृकत्वं विधीयते।

कस्य विधानम्? किं विधीयते? इति चेत् स्वोपादानगोचर अपरोक्षज्ञान चिकीर्षाकृतिजन्यत्वं न विधीयते। कृतित्वेन कार्यकारण भावनिर्वाहे व्याप्ति सिद्धौ ईश्वर ज्ञानेच्छयोः अन्यथासिद्धत्वात्। स्वत्वं च दृष्टान्त पक्ष साधारणं विचारासहं इत्थं च स्वरूपसम्बन्धावच्छिन्न कार्यत्वमुद्दिश्य विषयतासम्बन्धावच्छिन्न कारणतानिरूपित समवाय सम्बन्धावच्छिन्न जन्यत्ववान् प्रागभाव प्रतियोगित्वात् इत्यनुमानम् फलितम्। एतेन ईश्वरः सिध्यति। सत्वेन अनुभूयमानस्य अपलपितुं अशक्यत्वात् संसारस्य अनादित्वं संस्कार बललभ्यम्, संस्कार अनभ्युपगमे संसर्गापवर्गौ न सिध्येते। जगतः क्षणिकत्वं तत्वतो शून्यत्वं च बौद्धैरभ्यधायि। किम् तत्र गमकमिति चेत यत सत् तत् क्षणिकं यथा घटः इति। भारतीय दर्शनेषु ईश्वरास्तित्ववादे प्रातः स्मरणीयाः आद्याः उदयनाचार्याः। तेषां आत्मतत्व विवेक नामके ग्रन्थे बौद्धाधिकारखण्डनावसरे "यत् सत् तत क्षणिकं यथा घटः" इत्यनुमानं सम्यक् दूषितं यतः सत्वेन अनुभूयमानस्य प्रमेयस्य परमात्मनः क्षणिकत्व कथनं अशिरस्कवचनमेव। यत् सत् तत् क्षणिकं यथा घटः इत्यनुमानस्य सत्वेन अनुभूयमाने अप्रयोजकत्वात् बौद्धानुमानस्यैव व्यभिचार प्रसङ्गः।

भाष्यकारैः भाष्यारम्भे एव यत् प्रदर्शितं "दुःखपङ्क निमग्नंजगदुद्धिधीर्षुः" इति दुःखंध्वसात्मकत्वेन अपवर्गस्य ज्ञेयभूते आत्मनि सम्बन्धः परिकल्पितः। भगवान् गौतमः एवं सूत्रयामास आत्मशरीरेन्द्रियार्थमनः बुद्धि प्रवृत्तिदोष प्रेत्यभावफलदुःखापवर्गस्तु 'प्रमेयम्' "इति बौद्धाधिकार खण्डने जयन्तभट्टादयो प्राचीनाः रघुनाथशिरोमणि प्रभृतयो नवीनाः अपि एकार्थत्वेन परमार्थतो ज्ञेयत्वं ईश्वर रूप प्रमेयस्य इति सिद्धान्तमाचचक्रुः।

इत्येवं रीत्या प्राधान्येन सौगताभिप्रायः सर्वथा दूषित एव। चार्वाकवचनं तु बालिषमेव भासते। प्रत्यक्षमात्र प्रामाण्यं उताहो प्रत्यक्षमपि प्रमाणमिति सिध्यति वा? अत्रैव अनुमान प्रामाण्याङ्गीकार प्रसङ्गः। सांख्य सिद्धान्तः प्रकृति पुरुष सिद्धान्तः। प्रकृति परिणाम रूप बुद्धौ चैतन्याभिमानः पुरुषे च कर्तृत्वाभिमानः अपारमार्थिकः। अत एव कर्तृत्वरहितः पुरुषः आत्मा इति। तत्तु तिरस्कृतम्। यथा कर्तृत्वांशे भ्रमः तथा चैतन्यांशेऽपि भवतु इति। वेदान्तिनां स्वरूपवादोऽपि खण्डितः सविषयकत्वेन ज्ञानस्य निर्धर्मकत्वं परब्रह्मणि अविचारित रमणीयं एव इति।

एवं पिण्डीकृतार्थः जगतः निमित्तकारणत्वेन, वा, परमार्थतो ज्ञेयत्वेन वा ईश्वरः अधिगन्तव्य एव। न तत्र पूर्वपक्षं सहते न्यायशास्त्रम्। ईश्वरे द्यावाभूमीजनयन्देव एकः, विश्वस्यकर्ता इत्यादयः वेदः अपि प्रमाणम्। इत्थं च न्यायवैशेषिकयोर्मते ईश्वर एवं जगत्कर्ता परमार्थतो ज्ञेयश्च इति शम्।

# संस्कृत शिक्षा

—राम रत्नः शास्त्री

## त्रिंशः पाठः

### वाच्य प्रकरणम् (ख)

1. (क) ध्यान रखें कि कर्तृ वाच्य में क्रिया के सामान्य रूप का प्रयोग सभी लकारों पुरुषों व वचनों में होता है। यथा-सः पुस्तकं पठति, त्वं पुस्तक पठसि, अहं पुस्तकं पठामि इत्यादि। स पुस्तकं अपठत्। त्वं पुस्तकं पठ। अहं पुस्तकं पठेयम् इत्यादि।

(ख) किन्तु कर्म वाच्य में क्रिया के रूप बनते व प्रयुक्त होते हैं मूल धातु में "य" जोड़ कर और केवल आत्मनेपद का प्रयोग करके।

(ग) यथा—मूलधात् गम्+य+ते=गम्यते, दृश्+य+=दृश्यते श्रू+य+ते=श्रूयते, हन्+य ते=हन्यते इत्यादि। कर्म वाच्य में कर्ता गौण होता है और तीसरे कारक में प्रयुक्त होता है। कर्म मुख्य होता है और प्रथम कारक का होता है। जैसे --तेन (देवेन) पुस्तकं लिख्यते मया पत्रम् पठ्यते। रमया कथा श्रूयते आदि।

इन वाक्यों में कथा पत्रम् पुस्तकम् – प्रथम कारक के हैं। लिख, पठ्, श्रू, में 'य' जोड़ कर आत्मनेपद का प्रयोग है। इत्यादि।

कर्तृ वाच्य व कर्म वाच्य के कुछ वाक्य पढ़ें व समझें कि कर्तृ वाच्य का वाक्य कर्म वाच्य में कैसे परिवर्तित होता है—इस प्रक्रिया को "वाच्य परिवर्तन" करना भी कहते हैं।

| तथा—कर्तृ वाच्य | कर्म वाच्य |
|---|---|
| (1) सः ग्रामं गच्छति | तेन ग्रामः गम्यते |
| (2) छात्राः लेखं लिखन्ति | छात्रैः लेखः लिख्यते |
| (3) देवः भोजनं खादति | देवेन भोजनं खाद्यते। |
| (4) अहं गीताम् पठामि | मया गीता पठ्यते। |
| (2) दस्युः ग्रामीणं हन्ति | दस्युना ग्रामीणः हन्यते। |

3. भाववाच्य में कर्म नहीं होता – बाकी पूर्ववत् होता है—

(1) रामेण शय्यते। (2) रमया अत्र स्थीयते। (3) बालैः क्रीड्यते। (4) युष्माभिः वृथा भीयते। (5) बालेन हस्यते। (6) मया सक्रियं जीव्यते। (7) कुत्र सुप्यते आदि।

4. कर्तृ वाच्य में प्रयुक्त क्रियाएं आवश्यकतानुसार सभी लकारों पुरुषों व वचनों में प्रयुक्त की जा सकती हैं।

5. आवश्यकतानुसार ही कर्ता व कर्म में वचन का प्रयोग किया जाता है।

# सामान्य ज्ञान वर्धनम्

(क) अष्ट वसवः

1- अर्कः प्राणः, ध्रुवः, धर्मः दोषः, वसुः, विभावसुः।
अग्निश्चापि संदिष्टा अष्ट वसवः मुनिभिः पुरा।

तथा च

2- आपः सोमः ध्रुवः धर्मः प्रत्यूषश्चानिलोऽनलः।
प्रभासश्च पुरा प्रोक्ताः वसवोऽष्टमहर्षिभिः।

(ख) अश्वाः सूर्यरथस्य :

1- अश्वाः रविरथस्यैते अजः जयः, मनोजवः,
विजयश्चचित्तप्राणश्च, जितक्रोधः, जितस्तमः।

3- कामस्य पञ्चवाणाः :

अरविन्दमशोकं रसालं नवमल्लिकाः, नीलोत्पलं च
पञ्चैते, पञ्च वाणस्य सायकाः। अथ च।

2- उन्मादनस्तापनश्च, शोषण स्तम्भनस्तथा
सम्मोहनश्च कामस्य पञ्चवाणाः प्रकीर्तिताः।

4- अष्टसिद्धयः—

अणिमाः महिमा, चैव गरिमालघिमा तथा
प्राप्तिः, प्राकाम्य, मीशत्वं वशित्वं चाष्ट सिद्धयः।

## सुभाषितम्

अपि घोरापराधस्य वर्ममाश्रित्य तिष्ठतः।
स हि प्रच्छाद्यते दोषः शैलो मेघैरिवाश्रितः॥

# व्रतोत्सव निर्देशिका

**(दिनांक 21-10-1991 तः दि. 20-11-91 पर्यन्तम्)**

| दिनांकः | वारः | तिथिः | व्रतोत्सवः |
|---|---|---|---|
| 21-10-91 | सोमवारः | त्रयोदशी | प्रदोष व्रतम् |
| 22-10-91 | मंगलवारः | चतुर्दशी | श्री सत्य नारायण व्रतम् शरत् पूर्णिमा, कोजागरी व्रतम् |
| 23-10-91 | बुधवारः | पूर्णिमा | महर्षि वाल्मीकि जयन्ती कार्तिक स्नान प्रारम्भः हेमन्त ऋतु प्रारम्भः |
| 26-10-91 | शनिवारः | तृतीया | करक (करवा) चतुर्थी श्री गणेश व्रतम् |
| 30-10-91 | बुधवारः | अष्टमी | अहोई व्रतम् (पञ्जाब) |
| 2-11-91 | शनिवारः | एकादशी | रमा एका. व्रतम् |
| 3-11-91 | रविवारः | द्वादशी | प्रदोष व्रतम् गोवत्स द्वादशी यम दीप दानम् |
| 4-11-91 | सोमवारः | त्रयोदशी | धन त्रयोदशी |
| 5-11-91 | मंगलवारः | चतुर्दशी | नरक चतुर्दशी, महा-लक्ष्मी पूजनम् दीपावली पर्व, श्री हनुमान जयन्ती |
| 6-11-91 | बुधवारः | अमावस्या | जैन महावीर निर्वाण दिनम् |
| 7-11-91 | बृह. वारः | प्रतिपदा | गोवर्धन पूजा, अन्न कूटम् बलि पूजा |
| 8-11-91 | शुक्रवारः | द्वितीया | विश्वकर्मा-पूजा, यम द्वितीया (भाई दूज) |
| 15-11-91 | शुक्रवारः | अष्टमी | गोपाष्टमी कूष्माण्ड/ अक्षय नवमी |
| 16-11-91 | शनिवारः | नवमी | संक्रान्ति पर्व, सूर्यः वृश्चिक राशौ |
| 17-11-91 | रविवारः | दशमी | बलिदान दिन लाला लाजपतराय, भीष्म पंचक प्रारम्भः |
| 18-11-91 | सोमवारः | एकादशी | प्रबोधनी एका. व्रतम् |
| 19-11-91 | मंगलवारः | द्वादशी | प्रदोष व्रतम् |
| 20-11-91 | बुधवारः | त्रयोदशी | वैकुण्ठ चतुर्दशी व्रतम् |

(शुभ कार्येषु वर्ज्यं म् पञ्चकम् - दिनांक 14-11-91 (14 घ. 48 प) तः दिनांक 19-11-91 (23 घ. 51 प पर्यन्तम्)

मङ्गलं भगवान् विष्णुः मङ्गलं गरुडध्वजः।
मङ्गलं पुण्डरीकाक्षः, मङ्गलायतनो हरिः ॥

# वत्स धन्यतरो भूयाः

-- पं. टी. वी. परमेश्वर अय्यरः
1466 लक्ष्मी नगर, नई दिल्ली

(कथा शकलः कश्चित्)

बाल. स्वायुषि नाब्दपूर्तिमकरोत् पित्रोर्मृतिग्रस्तयोः
वृद्धिं प्राप स मातुलस्य च पितामह्याश्च कारुण्यतः ।
कौमारे पठितावदर्शितरुचिः क्षिप्तो मुहुर्दण्डितः
सक्रोधेन, दयान्विता तु जरठा सा वर्धयामास तम् ॥1॥
कैङ्कर्यं कृतवत्यजस्रमपि सा सम्मार्जनाद्यं श्रमाद् ।
गेहेषु स्मयदुष्ट निर्घृण हृदां भृत्यल्पतृष्यन्मनाः ।
पूपाद्यैर्दधिदुग्ध सान्द्रमधुरैः सन्तर्पयन्ती मुदा
पौत्रं तं विकचन्मतिः स्वयमथो तीव्रां विषह्य क्षुधाम् ।2
शश्वद् दुर्जन संगतिप्रियतया त्यक्तालयः संश्रयन्
लुण्टाकं कमपि क्रमेण विपुलं संप्राप्य वित्तं खलः ।
स्मृत्यारूढपितामहीप्रियकथः संप्राप्य तत्सन्निधिं ।
नम्रः संप्रणनाम तत्पदयुगं रत्नार्पणालोकितम् ॥3॥
तप्तेवाग्निकणेन दष्टचरणेवाहीन्द्रदन्तार्पणाद् ।
विद्धेवोग्रविषान्वितैश्च युगपच्छल्यैः शिताग्रैः स्तदा ।
सोद्वेगा चकिता च वृद्धवनिता साभ्यूह्य तथ्यं परं
निर्वर्ण्यामुमवज्ञयाऽश्रुकलुषा तस्थाववष्टब्धवाक् ॥4॥
वाचां प्राप्य ततः कथंचिदपि सा सामर्थ्यमुच्चारणे
प्राब्रूते वचनं स्म शुद्ध हृदये नाकृत्रिमस्फूर्तियुक् ।
"स्वेदक्लिन्न करद्वयोपहृतया सन्तर्प्यं मां श्राणया ।
भूया धन्यतरो हि वत्स न पुनश्चौर्याप्तवित्तप्रदः ॥

# कल की दुनिया
## बापू की दृष्टि में

"कल की दुनिया अहिंसा पर आधारित होगी, होनी भी चाहिए। यह बुनियादी नियम है। बाकी सब कुछ अपने आप होता चला जायेगा।

व्यक्ति, समूह और राष्ट्र सब को अहिंसा और प्रेम का मार्ग ही अपनाना पड़ेगा।

यदि ऐसा हुआ तो आने वाले कल की दुनिया में न गरीबी होगी, न युद्ध होंगे, न उलट-फेर होंगे, न ही रक्तपात होगा।"

## प्रगति के पथ पर — शांति के साथ

# पाठक पत्राणि

—तिलकराज आचार्य
संस्कृत अध्यापक
सी. वी. पी. सै. स्कूल
जालंधर छावनी

1. मान्यवर सम्पादक

संस्कृतामृतम् दिल्ली

सादर नमस्कार। आपसे प्रेषित संस्कृतामृतम् का पाठन गत दो वर्षों से चल रहा है। संस्कृत जगत में विशेष सेवारत कार्य हेतु प्रयास प्रशंसनीय तो है ही अतुलनीय भी है। वर्तमान समय में विशेष जहां पंजाब जैसे क्षेत्र में आपकी निःस्वार्थ सेवा से प्रभावित होकर मैं अपने विद्यालय में +1 तथा +2 के एक-एक प्रति प्रति मास लगवा रहा हूं मनीआर्डर भी साथ ही भेज रहा हूं।

**समाचारः**

बच्चों में रुचि पैदा करने के लिए यहां एक परिषद् का गठन किया हैं। "संस्कृत विकास परिषद" का गठन निम्न प्रकार से हुआ है।

संरक्षक-तिलकराज आचार्य

प्राध्यापक सी.वी पी. सै. स्कूल जालन्धर छावनी

प्रधान रविकान्त +2 का छात्र

सचिव विद्याभास्कर +2 का छात्र

कोषाध्यक्ष अजय शर्मा +2 का छात्र

प्रचारमंत्री संजीव शर्मा +2 का छात्र

मुख्य सदस्य नीरजकुमार, मनोजकुमार, विजयकुमार, रविन्द्र कुमार, राजेन्द्र कुमार, अजीत कुमार, चन्दन कुमार, विकास नाहर तथा संजीव गुप्ता।

2. श्रीमन्तः संस्कृतामृत सम्पादकमहोदयाः,

सादरं नमो नमः।

अत्र कुशलं तत्रास्तु। श्रीमद्भिः सुसम्पादितस्य संस्कृतामृतस्य अगस्तमासीयाङ्कमाद्योपान्तमवलोक्य अत्यन्तम् आनन्दितोऽस्मि। अस्मिन्नङ्के नैकाः स्तरीयाः सरसाः उपादेयाश्च गद्यपद्यात्मकरचनाः विलसन्ति— अस्य श्रेष्ठसाहित्यस्य प्रस्तुतयेऽस्मदीयं हार्दिकसाधुवादसहितम्-नेकाभिनन्दनं स्वीकुर्वन्तु श्रीमन्तः।

विश्वसिमि, भवन्तोऽनवरतं स्वकीये सारस्वतसत्प्रयासे निरताः भूत्वा संस्कृतामृतं संजीवयिष्यन्ति सरससामग्री प्रकाशनेन। समस्त शुभकामनाः सन्त्यस्मदीयाः संस्कृतामृताय।

सादरम् भवदीयः
डा॰ कैलाशनाथ द्विवेदी
प्राचार्य, मथुरा प्रसाद महाविद्यालय कोंच (जालौन)

3. आदरणीय संपादक जी

नमस्कार।

आपकी पत्रिका निरन्तर मिलती रहती है। आपके पत्र में संस्कृत के बारे में जानकारी मिलती रहती है। संस्कृत साहित्य की रक्षा हेतु आपका मासिक पत्र समर्पित है। इस प्रकार के पत्रों की माँग वर्तमान में है ताकि हम अपनी सभ्यता और संस्कृति को न भूल सकें और अपनी पहचान को बनाए रखें। "संस्कृत शिक्षा स्तम्भ बहुत ही महत्वपूर्ण है। कविता-गीत-व्यंग्य बहुत अनूठे तरीके से पेश किए जाते हैं व लेख भी महत्वपूर्ण होते हैं। आर्थिक कठिनाइयों के बावजूद आप पत्र निकाल रहे हैं आपका साहस सराहनीय है।

हीरासिंह कौशल
गाँव व पत्र महादेव (सुन्दरनगर)
जि. मण्डी (हि. प्र.) 174401

## समाचाराः

1\. आचार्य चन्द्रमणि पाण्डेय
प्राचार्य बेली संस्कृत महाविद्यालय, रायबरेली
डा. शुक्ल सम्मानित

रायबरेली । 5 सितम्बर; शिक्षक दिवस समारोह बेली संस्कृत महाविद्यालय में संस्कृत के उद्भट विद्वान एवं प्रादेशिक संस्कृत महाविद्यालय प्राध्यापक समिति के वरिष्ठ संचालक आचार्य चन्द्रमणि पाण्डेय प्राचार्य की अध्यक्षता में सोल्लास सम्पन्न हुआ ।

इस अवसर पर संस्कृत शोध संस्थान के निदेशक एवं फीरोज गाँधी कालेज के प्रवक्ता संस्कृतरत्न डा. शिवचरण शुक्ल को विधिवत् वैदिक मन्त्रों के साथ "संस्कृत कुल भूषण" की उपाधि से समानित किया ।

आचार्य चंद्रमणि पाण्डेय ने विशाल संस्कृत विद्वानों एवं संस्कृतानुरागियों के समूह को सम्बोधित करते हुए राधाकृष्णन जी के योगदान की प्रशंसा की तथा डा. शिव चरण शुक्ल के व्यक्तित्व एवं कृतित्व पर प्रकाश डाला ।

डा. शुक्ल के सहपाठी एवं संस्कृत विद्वान श्री राधेश्याम तिवारी ने बताया कि इस समय डा. शुक्ल "ग्लोबल डाइमेन्सन्स आफ संस्कृत स्टडीज" नामक पुस्तक का सम्पादन करने जा रहे हैं ।

विशिष्ट अतिथि आचार्य शत्रुञ्जय प्रसाद पाण्डेय प्राचार्य मानव-जीवन सुधार संस्कृत महाविद्यालय डलमऊ ने डा. शुक्ल जैसे विद्वान के अभिनन्दन को समय की पुकार की संज्ञा दी है । सम्मानित अतिथि थे आचार्य कृष्ण बिहारी त्रिपाठी प्राचार्य जान्हवी संस्कृत महाविद्यालय कालाकांकर प्रतापगढ़, आचार्य कमलेश मिश्र व्याकरणाचार्य इटावा, डा. सुषमा वर्मा, फतेहपुर, डा. चन्द्रकांत मिश्र प्राचार्य संस्कृत महाविद्यालय राजामऊ, आचार्य शत्रुघन प्रसाद तिवारी प्राचार्य संस्कृत महाविद्यालय बड़ा गांव । श्री काशी प्रसादद्विवेदी, श्री कमलाकांन्त मिश्र आचार्य यमुना प्रसाद द्विवेदी, आचार्य कृष्णानन्द शुक्ल, श्री शिवराय त्रिपाठी आदि ।

अन्त में डा. शुक्ल ने अपनी साहित्यिक यात्राओं सम्बन्धी संस्मरणों को सुनाते हुए कहा कि विदेश में प्रायः सभी लोग यह जानने की अभिलाषा रखते हैं कि भारतवर्ष में आज संस्कृत का क्या स्वरूप है ? शोध अध्ययन के क्या ढंग हैं आदि ।

## प्रशिक्षणशिविरं सुसम्पन्नम्

2\. सदानन्ददीक्षितः
लो. भा. प्र. समिति
शरधावाली, पुरी (752002)

वृन्दावनम् — लोकभाषाप्रचारसमितिपक्षतः आयोजितं षोडशतमं प्रचारक शिविरं 24-8-91 दिनांके समितेः उत्तरप्रदेशराज्यशाखाअध्यक्षैः तथा मथुरा-सांसदैः डा. स्वामि सच्चिदानन्दहरिसाक्षिभिः समुद्घाटितम् । स्वामिपादाः संस्कृतभाषायाः सुरक्षार्थं सर्वनागरिकाः प्रशासकाश्च उदारचित्तेन सहयोगं कुर्वन्तु इति उद्बोधितवन्तः अत्र आध्यक्ष्यं कुर्वाणाः प्रो. डा. वासुदेवकृष्णचतुर्वेदिनः सर्वेषां मार्गदर्शनं प्रार्थितवन्तः । लालबहादुरशास्त्रि राष्ट्रियसंस्कृतविद्यापीठ-कुलपतिभिः डा. मण्डन मिश्रैः प्रेषिताः शुभाशंसाः सभायां पठिताः ।

श्रीरंगलक्ष्मीसंस्कृतमहाविद्यालये समितेः राष्ट्रियप्रशिक्षण सचिवः श्री सूर्यनारायणनन्दः, राजस्थानशाखा सचिवः श्री निरंजनसाहुः, केन्द्रीय प्रचारकः श्री काशीनाथ साहुः शिविरसंचालनं कुर्वन्ति स्म । बौद्धिककार्यक्रमे प्रो. जगदानन्ददासः, डा० सदानन्ददीक्षितः, डा सुरेन्द्रशर्मा, श्रीकिशोरिलाल भागडा 'मधुर', श्री खंडेलवालः श्री पातोडिआ जी श्री भगवान रायः, श्री अश्विनीशास्त्री । संस्कृत महाविद्यालय प्राचार्याः पण्डितचक्रपाणिमिश्रमहोदयः च मार्गदर्शनम् कृतवन्तः । शिविरपक्षतः संस्कृतनाटकमहोत्सवः 2-9-91 दिनांके श्रीकृष्णजन्माष्टमीदिने ब्रज-अकादमी सभांगणे आयोजितः ।

शिविर समापनसमारोहे मुख्यातिथिपदम् अलंकुर्वाणाः वीतरागि स्वामिवामदेवमहाराजाः संस्कृतं भारतीय संस्कृतेः प्राणस्वरूपं, उद्बोधितवन्तः : मुख्यवक्तारः डा. सुरेन्द्रशर्माणः संस्कृतं बिना भारतीयता भारतं च सुरक्षितं न स्थास्यति इति सूचितवन्तः वृन्दावनशोधसंस्थानस्य निर्देशकाः अध्यक्षपदमलकृत्य डा. नरेशचन्द्रबंसलमहोदयाः संस्कृतभाषायाः अमूल्यमहत्वं प्रतिपादितवन्तः ।

शिविर सफल्यार्थम् अमूल्यसहयोगं कृतवन्तः ब्रज-अकादमी अध्यक्षाः स्वामि श्रीपाद बाबाचरणः, श्रीरंगमन्दिरस्य अध्यक्षाः स्वामिरंगाचार्यपादाः, समितेः वृन्दावन केन्द्राध्यक्षाः श्रीठाकुरजी तथा स्वामि हरिसाक्षिमहोदयः कृतज्ञतां आवहन् ।

# सूचना एवं चार निर्देशालय दिल्ली प्रशासन दिल्ली

1. दिल्ली प्रशासन ने श्रम न्यायालयों/औद्योगिक पंचाटों में अब तक लम्बित पड़े श्रम विवादों को तीव्रता से निपटाने के लिए 27. 10.91 को एक लोक अदालत के आयोजन का निर्णय किया है। प्रबंधकों व श्रमिकों से अनुरोध है कि वे अपनी सहमति विहित प्रपत्र में भरकर भेजें।

विहित प्रपत्र श्रमायुक्त के कार्यालय, 15 राजपुर रोड दिल्ली से प्राप्त किए जा सकते हैं।

2. दिल्ली प्रशासन ने उचित दर की दुकानों में खाद्य वस्तुओं की यथासंभव आपूर्ति बनाए रखने के लिए निश्चय किया है।

3. उचित दर की दुकान का कोई दुकानदार खाद्य पदार्थों की खुले बाजार में बिक्री न करे इस दृष्टि से "परिपालन शाखा" द्वारा गहन जांच की जा रही है।

उत्तरी दिल्ली के राजकीय माडल स्कूल, शंकराचार्य मार्ग के छात्र-छात्राओं द्वारा आज एक युवा-संसद का आयोजन किया गया। श्री रामचन्द्र विकल, पूर्व सांसद तथा युवा संसद के जन्मदाता, श्री आई० डी. शर्मा, अवर सचिव, संसदीय मामलों के विभाग तथा श्री शब्बीर अहमद, उप-शिक्षा निदेशक (उत्तरी) भी इस अवसर पर उपस्थित थे।

युवा संसद की कार्रवाई बड़े प्रभावपूर्ण ढंग से तथा शालीनता के साथ चली और दर्शक दीर्घा में बैठे लोग इस कार्रवाई को देखकर मंत्रमुग्ध हो गये।

पहला पुरस्कार कु० पूजा सिंह, (मानव संसाधन मंत्री की भूमिका) दूसरा पुरस्कार कु० नीति महाजन, (अध्यक्ष भूमिका) कु० प्रीति शर्मा, (प्रधानमंत्री, भूमिका कु० मालिका अबरोल, (विपक्षी-सदस्य भूमिका तथा) कु० मोना सेठ, (समाज कल्याण एवं बाल विकास मंत्री) को संयुक्त रुप से मिला। तीसरा तथा चौथा पुरस्कार क्रमशः विपिन माधव भारदवाज—(विपक्षी सदस्य) तथा शान्तनू, (वित्त मंत्री) को मिला।

4. दिल्ली महानगर परिषद ने राष्ट्र मण्डल संसदीय प्रतिनिधियों के सम्मानार्थ भव्य समारोह का आयोजन महानगर परिषद के अध्यक्ष श्री पुरुषोत्तम गोयल ने ऐतिहासिक पुराना सचिवालय में किया।

ये प्रतिनिधि 37वें राष्ट्रमण्डल संसदीय सम्मेलन के सिलसिले में आजकल नई दिल्ली आए हुए हैं।

समारोह के मुख्य अतिथि लोकसभा के अध्यक्ष श्री शिवराज पाटिल थे व अध्यक्ष दिल्ली के उपराज्यपाल श्री मार्कण्डेय सिंह।

समारोह में 47 राष्ट्रों के करीब 500 प्रतिनिधि मौजूद थे—जिनमें पीठासीन अधिकारी, सांसद अनेक केन्द्रीय मंत्री, विभिन्न राज्यों की विधान सभाओं के पीठासीन अधिकारी, राजनयिक, गण्यमान्य व्यक्ति व स्वतंत्रता सेनानी आदि उपस्थित थे। विशेष स्मारिका का विमोचन भी किया गया।

प्रत्येक राष्ट्र के प्रतिनिधि मण्डल के नेता ने पुराना सचिवालय प्रांगण में एक-एक पौधा लगाया।

प्रतिनिधियों के सम्मान में सांस्कृतिक कार्यक्रम किया गया।

# संस्कृत दिवस समारोह का भव्य आयोजन

दिल्ली विश्वविद्यालय के टैगोर हाल में ' संस्कृत सेवक संघ ' तथा ' संस्कृत विभाग ', दिल्ली विश्वविद्यालय के संयुक्त तत्वावधान में ' संस्कृत दिवस समारोह ' का भव्य आयोजन संसद में विपक्ष के नेता श्री लाल कृष्ण आडवाणी जी की अध्यक्षता में सम्पन्न हुआ । समारोह का प्रारंभ दिल्ली विश्वविद्यालय की छात्राओं द्वारा मंगलाचरण तथा कुलाची हंसराज माडल स्कूल – द्वितीय पाली, अशोक विहार की छात्राओं द्वारा ' सरस्वती वन्दना ' के मनमोहक कार्यक्रम से हुआ ।

तत्पश्चात समारोह का विधिवत प्रारंभ हुआ । माननीय श्री लाल कृष्ण आडवाणी का स्वागत संस्कृत सेवक संघ के महामंत्री अनिल कुमार गुप्त, कोषाध्यक्ष डॉ० सुषमा रानी गुप्ता , तथा दिल्ली विश्वविद्यालय के संस्कृत विभागाध्यक्ष डॉ० कृष्ण लाल ने माल्यार्पण द्वारा किया ।

अपने स्वागत भाषण में ' संस्कृत सेवक संघ ' के महामंत्री अनिल कुमार गुप्त ने देश में संस्कृत की वर्तमान स्थिति और समारोह के उद्देश्य पर प्रकाश डाला, तथा भारत सरकार से सभी राज्यों में बारहवीं कक्षा तक संस्कृत की अनिवार्य शिक्षा एवं ओपन स्कूल तथा ओपन विश्वविद्यालयों में संस्कृत विषय रखने की मांग करते हुए दृढ़तापूर्वक विश्वास दिलाया कि संस्कृत के उत्थान के लिए संस्कृत सेवक संघ निरन्तर प्रयत्नशील रहेगा । साथ ही, अनिल कुमार गुप्त ने उन ५४ सांसदों के प्रति कृतज्ञता ज्ञापित की, जिन्होंने संस्कृत में शपथ लेकर न केवल संविधान के प्रति ही निष्ठा प्रकट की अपितु देववाणी के उत्थान के लिए अपने दृढ़संकल्प का परिचय देते हुए संस्कृत प्रेमियों को गौरवान्वित किया ।

समारोह में अपने अध्यक्षीय भाषण में श्री आडवाणी जी ने कहा कि ' संसार के लगभग सभी विश्वविद्यालयों द्वारा संस्कृत विभागों का संचालन हो रहा है, और विश्व की समस्त भाषाओं पर परीक्षण करने के उपरान्त कम्प्यूटर विज्ञान में संस्कृत को सर्वश्रेष्ठ भाषा घोषित किया है । किन्तु इतना होने पर यह बहुत बड़ी विडम्बना है कि संस्कृत के उद्गम देश भारत में आज संस्कृत की अवहेलना हो रही है । हम सब का यह सम्मिलित कर्तव्य है कि हम संस्कृत की पुनर्स्थापना में प्राण – पड़ से जुट जाएं और मैकाले की मानव – सन्तान द्वारा संस्कृत पर किए जा रहे प्रहार को निरस्त कर अपने धर्म का पालन करें ।'

इस समारोह में संसद में संस्कृत में शपथ लेने वाले दो अन्य सांसद श्री सत्यनारायण जटिया एवं श्रीमती भावना चिखलिया भी उपस्थित थे । दिल्ली विश्वविद्यालय के प्रोफेसर, रीडर तथा छात्र–छात्राएं, महाविद्यालयों के प्राध्यापक तथा दिल्ली के विभिन्न विद्यालयों के संस्कृत शिक्षकों ने बड़ी संख्या में उपस्थित होकर समारोह की शोभा बढ़ाई । दिल्ली विश्वविद्यालय की एक छात्रा ने भारत की गौरवान्वित भाषा संस्कृत को नमन करते हुए एक कविता पाठ किया ।

इस अद्वितीय आनन्द लोक में डूबे संस्कृत प्रेमियों की तन्द्रा तब भंग हुई, जब खचाखच भरे टैगोर हाल में अचानक दिल्ली विश्वविद्यालय के कुछ छात्रों ने प्रवेश किया तथा अपने निहित राजनीतिक स्वार्थों के लिए समारोह में व्यवधान डालने का प्रयास किया । किन्तु ' संस्कृत अमर रहे ' के नारों की गूंज ने उनके इस प्रयास को असफल कर दिया । मात्र पांच मिनट के व्यवधान के पश्चात कार्यक्रम पूर्ववत सफलतापूर्वक चलता रहा ।

दिल्ली विश्वविद्यालय के संस्कृत विभाग के अध्यक्ष डॉ० कृष्ण लाल ने भारत के विद्यालयों, महाविद्यालयों एवं विश्वविद्यालयों में संस्कृत की वर्तमान दयनीय स्थिति पर विस्तार से प्रकाश डाला । हंसराज महाविद्यालय के प्राध्यापक डॉ० प्रशान्त वेदालंकार ने भारत सरकार और उसके मानव संसाधन विकास मंत्रालय का संस्कृत के प्रति किये जाने वाले सौतेले व्यवहार की विस्तार से व्याख्या करते हुए ' त्रिभाषा सूत्र ' की आलोचना की ।

संसद सदस्य श्री सत्यनारायण जटिया ने समुपस्थित संस्कृत प्रेमियों को आश्वासन दिया कि संस्कृत को अपने पद पर प्रतिष्ठित करने के लिए वे निरन्तर प्रयत्नशील हैं और जब तक वे अपने उद्देश्य में सफल नहीं हो जाते, तब तक यह संघर्ष जारी रखेंगे, इसी क्रम में कुछ राज्यों में बारहवीं कक्षा तक संस्कृत की शिक्षा अनिवार्य करवाने के लिए भी प्रयत्न करेंगे ।

कार्यक्रम के सफल संचालन का श्रेय श्रीमती मंजुल बहुगुणा को जाता है । अन्त में, धन्यवाद ज्ञापन के उपरान्त सभी संस्कृत प्रेमियों ने शान्ति पाठ किया । तत्पश्चात अनिल प्रकाशन, दिल्ली द्वारा मिष्ठान्नपूर्ण जलपान से समारोह का समापन हुआ ।

सरस्वती वंदना प्रस्तुत करती हुई कुलाची हंसराज माडल स्कूल, द्वितीय पाली, अशोक विहार की छात्राएँ । मंच पर बैठे हुए – श्री लाल कृष्ण आडवाणी तथा अन्य ।

श्री लाल कृष्ण आडवाणी सभा को सम्बोधित करते हुए । मंच पर विराजमान संसद सदस्या श्रीमती भावना चिखलिया तथा अनिल कुमार गुप्त ।

समारोह में उपस्थित संस्कृत-प्रेमी ।